पिशाचस्याभिषङ्गेन गदाश्चाष्टौ प्रकीर्तिताः।
अपस्माराश्च चत्वार उन्मादाः षडुदीरिताः॥ ३९॥
अष्टादशगदा भूतविद्याया सूक्ष्मदर्शिभिः।
एवं हि सौश्रुते तन्त्रे काशीराजेन कीर्तिताः॥ ४०॥

व्यासतो विस्तरतः। हिशब्दो हेत्वर्थे, यस्मात् कारणात् ॥ ७॥ ८॥—

**भिन्ना दोषास्त्रयो गुणाः।**
**द्विषष्टिधा भवन्त्येते भूयिष्ठमिति निश्चयः॥ ९॥**

भिन्ना इत्यादि। भिन्ना भेदंगताः। द्विषष्टिधा भवन्तीत्यर्थः। त्रयो दोषा वातपित्तश्लेष्माणः। गुणा गुणमयाः सत्त्वरजस्तमोलक्षणाः। तद्यथा—रजोभूयिष्ठो मारुतः, रजो हि प्रवर्तकं सर्वभावानां; पित्तं सत्त्वोत्कटं, लघुप्रकाशकत्वात्, रजोयुक्तं वेत्येके; कफस्तमोबहुलः, गुरुप्रावरणात्मकत्वादित्याहुर्भिषजः। यद्येवं तत् कथं कफप्रकृतिके पुंसि सत्त्वगुणोपपन्नता पठिता? उच्यते—गुणद्वितयमपि कफे ज्ञातव्यं, सत्त्वतमोबहुला आप इत्युक्तत्वात्॥ ९॥

**त्रय एव पृथक् दोषा द्विशो नव समाधिकैः।**
**त्रयोदशाधिकैकद्विसममध्योल्वणैस्त्रिशः॥ १०॥**
**पञ्चाशदेवं तु सह भवन्ति क्षयमागतैः।**
**क्षीणमध्याधिकक्षीणक्षीणवृद्धैस्तथाऽपरैः॥ ११॥**
**द्वादशैवं समाख्यातास्त्रयो दोषा द्विषष्टिधा।**
**मिश्रा धातुमलैर्दोषा यान्त्यसंख्येयतां पुनः॥१२॥**
**तस्मात् प्रसङ्गं संयम्य दोषभेदविकल्पनैः।**
**रोगं विदित्वोपचरेद्रसभेदैर्यथैरितैः॥ १३॥**
**भिषक् कर्ताऽथ करणं रसा दोषास्तु कारणम्।**
**कार्यमारोग्यमेवैकमनारोग्यमतोऽन्यथा॥ १४॥**
**अध्यायानां तु षट्षष्ट्या ग्रथितार्थपदक्रमम्।**
**एवमेतदशेषेण तन्त्रमुत्तरमृद्धिमत्॥ १५॥**
**स्पष्टगूढार्थविज्ञानमगाढमन्दचेतसाम्।**
**यथाविधि यथाप्रश्नं भवतां परिकीर्तितम्॥ १६॥**
**सहोत्तरं त्वेतदधीत्य सर्वं**
**ब्राह्मं विधानेन यथोदितेन।**
**न हीयतेऽर्थान्मनसोऽभ्युपेता-**
**देतद्वचो ब्राह्ममतीव सत्यम्॥ १७॥**

**इति सौश्रुते आयुर्वेदशास्त्रे उत्तरस्थानं समाप्तम्।**

कथमेते द्विषष्टिधा भवन्तीत्याह—त्रय एवेत्यादि। तत्र पृथक् प्रकुपिता दोषा वातपित्तश्लेष्माणस्त्रयः, इतरौ च द्वौ स्वस्थाविति ज्ञेयौ। वृद्धो वातः स्वस्थौ पित्तश्लेष्माणौ, वृद्धं पित्तं स्वस्थौ वातश्लेष्माणौ, वृद्धः श्लेष्मा स्वस्थे वातपित्ते इति। द्विशो नव समाधिकैरिति तत्र समवृद्धाभ्यां द्वाभ्यां दोषाभ्यां त्रयः संसर्गा भवन्ति; यथा—वातपित्ते समे वृद्धे स्वस्थः श्लेष्मा, वातश्लेष्माणौ समौ वृद्धौ स्वस्थं पित्तं, पित्तश्लेष्माणौ समौ वृद्धौ स्वस्थो वात इति। अन्यतराधिकवृद्धाभ्यां षट्, तद्यथा—वातपित्तयोः वृद्धयोः वातोऽधिको वृद्धः स्वस्थः श्लेष्मा; वातपित्तयोर्वृद्धयोः पित्तमधिकं वृद्धं स्वस्थः श्लेष्मा, वातश्लेष्मणोर्वृद्धयोः वातोऽधिको वृद्धः स्वस्थं पित्तं, वातश्लेष्मणोः वृद्धयोः श्लेष्माऽधिको वृद्धः स्वस्थं पित्तं; पित्तश्लेष्मणोर्वृद्धयोः पित्तमधिकं वृद्धं स्वस्थो वातः, पित्तश्लेष्मणोर्वृद्धयोः श्लेष्मा अधिको वृद्धः स्वस्थो वातः। त्रिशस्तु वृद्धैस्त्रयोदश। तत्र त्रिभिरधिकैरेकः, अधिकैकदोषास्त्रयः, द्विदोषास्त्रयः, सममध्यमोल्वणदोषाः षट्। तद्यथा—वातपित्तश्लेष्मणां वृद्धानां वातोऽधिकवृद्धः, वातपित्तश्लेष्मणां वृद्धानां पित्तमधिकवृद्धं, वातपित्तश्लेष्मणां वृद्धानां श्लेष्माऽधिकवृद्धः-अथाधिकद्विवृद्धदोषाः, तद्यथा,—वातपित्तश्लेष्मणां वृद्धानां वातपित्ते अधिकवृद्धे, वातपित्तश्लेष्मणां वृद्धानां वातश्लेष्मणि अधिकवृद्धे, वातपित्तश्लेष्मणां वृद्धानां वातपित्ते अधिकवृद्धे। अथ हीनमध्योल्वणवृद्धाः षडुच्यन्ते। तत्र समः समवृद्धो हीनवृद्ध इत्यर्थः। तद्यथा—हीनवृद्धो वातः, मध्यवृद्धं पित्तं, अधिकवृद्धः श्लेष्मा; हीनवृद्धो वातः, मध्यवृद्धः श्लेष्मा, अधिकवृद्धं पित्तं; हीनवृद्धं पित्तं, अधिकवृद्धो वातः, मध्यवृद्धः श्लेष्मा; मध्यवृद्धो वातः, हीनवृद्धं पित्तं, अधिकवृद्धः श्लेष्मा; हीनवृद्धः श्लेष्मा, अधिकवृद्धं पित्तं, मध्यवृद्धो वातः; अधिकवृद्धो वातः, मध्यवृद्धं पित्तं, हीनवृद्धः श्लेष्मा। सर्वदोषैः समवृद्धैरेकः। उक्तं च तन्त्रान्तरे—"द्व्युल्वणैकोल्वणैः षट् स्युर्हीनमध्याधिकैश्च षट्। समैश्चैको विकारास्ते सन्निपातास्त्रयोदश"—इति। पञ्चाशदित्यादि। एवमेतेन प्रकारेण क्षीणैर्दोषैः पञ्चविंशतिभेदाः स्युः। तद्यथा—वातपित्तकफैरेकैकैः क्षीणस्त्रयो भेदा भवन्ति। द्विशो नव प्रोच्यन्ते। तद्यथा—वातपित्ते समक्षीणे स्वस्थः श्लेष्मा, वातश्लेष्माणौ समक्षीणौ स्वस्थं पित्तं, पित्तश्लेष्माणौ समहीनौ स्वस्थो वातः; वातपित्तयोः क्षीणयोर्वातोऽधिकक्षीणः स्वस्थः श्लेष्मा, वातपित्तयोः क्षीणयोः पित्तमधिकक्षीणं स्वस्थः श्लेष्मा, वातश्लेष्मणोः क्षीणयोर्वातोऽधिकक्षीणः स्वस्थं पित्तं, वातश्लेष्मणोः क्षीणयोः श्लेष्माऽधिकक्षीणः स्वस्थं पित्तं, पित्तश्लेष्मणोः क्षीणयोः पित्तमधिकक्षीणं स्वस्थो वातः-पित्तश्लेष्मणोः क्षीणयोः श्लेष्माऽधिकक्षीणः स्वस्थो वातः। अथ क्षीणदोषत्रयभेदास्त्रयोदश प्रोच्यन्ते। तत्र—त्रिभिरपि समक्षीणैरेकः। अधिकैकैकक्षीणैश्च त्रयः; यथा,—वातपित्तश्लेष्मणां क्षीणानां वातोऽधिकक्षीणः, वातपित्तश्लेष्मणां क्षीणानां पित्तमधिकक्षीणं, वातपित्तश्लेष्मणां क्षीणानां श्लेष्मा अधिकक्षीणः। अथाधिकक्षीणद्विदोषाः; तद्यथा—वातपित्तश्लेष्मणां क्षीणानां वातपित्ते अधिकक्षीणे, वातपित्तश्लेष्मणां क्षीणानां वातश्लेष्माणावधिकक्षीणौ, वातपित्तश्लेष्मणां क्षीणानां पित्तश्लेष्माणौ अधिकक्षीणौ। अथ हीनमध्योल्वणक्षीणाः षट् प्रोच्यन्ते। तद्यथा,—हीनक्षीणो वातः मध्यक्षीणं पित्तं